# सर्वदाभिगतस्सद्भिस्समुद्र इव सिन्धुभिः ।
# आर्यस्सर्वसमश्चैव सदैव प्रियदर्शनः ॥1.1.16॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

(रामः) सर्वदा सद्भिः समुद्र इव अभिगतः (भवति)। (सः) आर्यः सदा एव प्रियदर्शनः च (अस्ति)।

- अन्वयार्थः

(रामः) सततं सज्जनैः सागरः सदृशः संगतः (भवति)। (सः) पूज्यः सर्वेषु तुल्यः (समानः) सर्वदैव प्रियरूपः (अस्ति)।

# सर्वदाभिगतस्सद्भिस्समुद्र इव सिन्धुभिः ।
# आर्यस्सर्वसमश्चैव सदैव प्रियदर्शनः ॥1.1.16॥

- पदपरिचयः
  - सर्वदा, सदा– तद्धितान्तम् अव्ययम् ।
  - अभिगतः, समुद्रः, आर्यः, सर्वसमः प्रियदर्शनः – अभिगत, समुद्र, आर्य, सर्वसम, प्रियदर्शन - पुं, प्रथमा, एकवचनम् ।
  - इव, च, एव – अव्ययम् ।
  - सद्भिः – सत्,- पुं, तृतीया, बहुवचनम् ।
  - सिन्धुभिः – सिन्धु - स्त्री, तृतीया, बहुवचनम् ।

स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ।
समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥1.1.17॥

- पदच्छेदः
- अन्वयः ( आकाङ्क्षापद्धतिः)

सर्वगुणोपेतः सः कौसल्यानन्दवर्धनः च (अपि अस्ति)। गाम्भीर्ये (सः) समुद्रः इव, दैर्येण हिमवानिव (अस्ति)।

- अन्वयार्थः

पूर्वोक्तः (रामः) सर्वैः गुणैः युक्तः कौसल्यामातुः आनन्दस्य वर्धनः (सः) गभीरतायां सागरसदृशः धृत्या हिमालयः इव (अस्ति)।

# स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ।
# समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥1.1.17॥

- पदपरिचयः
  - सः – तत् - पुं, प्रथमा, एकवचनम्।
  - इव, च – अव्ययम्।
  - सर्वगुणोपेतः, कौसल्यानन्दवर्धनः, समुद्रः - सर्वगुणोपेत, कौसल्यानन्दवर्धन, समुद्र - पुं, प्रथमा, एकवचनम्।
  - धैर्येण – धैर्य - नपुं, तृतीया, एकवचनम्।
  - गाम्भीर्ये – गाम्भीर्य – नपुं, सप्तमी, एकवचनम्।
  - हिमवान् – हिमवत् - पुं, प्रथमा, एकवचनम्।

विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥1.1.18॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

(सः रामः) वीर्ये विष्णुना सदृशः सोमवत् प्रियदर्शनः (च अस्ति)। क्रोधे कालाग्निसदृशः, क्षमया पृथिवीसमः (अस्ति)।

- अन्वयार्थः

(सः रामः) पराक्रमे नारायणेन तुल्यः चन्द्रवत् प्रियरूपः कोपे प्रलयाग्निसमः क्षमाधर्मेण धरित्रीतुल्यः (अस्ति)।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

# विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।
# कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥1.1.18॥

- पदपरिचयः
  - विष्णुना – विष्णु – पुं, तृतीया, एकवचनम् ।
  - सदृशः, प्रियदर्शनः, कालाग्निसदृशः, पृथिवीसमः - सदृश, प्रियदर्शन, कालाग्निसदृश, पृथिवीसम – पुं, प्रथमा, एकवचनम् ।
  - वीर्ये – वीर्य – नपुं, सप्तमी, एकवचनम् ।
  - क्रोधे – क्रोध – पुं, सप्तमी, एकवचनम् ।
  - सोमवत् – तद्धितान्तम् अव्ययम् ।
  - क्षमया – क्षमा – स्त्री, तृतीया, एकवचनम् ।

# धनदेन समस्त्यागे सत्ये धर्म इवापरः ।
# तमेवंगुणसम्पन्नं रामं सत्यपराक्रमम् ॥1.1.19॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

त्यागे धनदेन समः सत्ये अपरः धर्मः इव (च अस्ति)। तमेवं गुणसंपन्नं रामम् ( महीपतिः दशरथःऐच्छत्)।

- अन्वयार्थः

दाने कुबेरेण तुल्यः सत्यवचने अन्यः धर्मदेवः (अस्ति)। पूर्वोक्तगुणोपेतम् अमोघपराक्रमम् ( महीपतिः दशरथःअवाञ्छत्))।

# धनदेन समस्त्यागे सत्ये धर्म इवापरः ।
# तमेवं गुणसम्पन्नं रामं सत्यपराक्रमम् ॥1.1.19॥

- पदपरिचयः
  - धनदेन – धनद – पुं, प्रथमा, एकवचनम् ।
  - समः, धर्मः, अपरः – सम, धर्म, अपर – पुं, प्रथमा, एकवचनम् ।
  - इव, – अव्ययम् ।
  - त्यागे, – त्याग, - पुं, प्रथमा, एकवचनम् ।
  - सत्ये - सत्य – नपुं, प्रथमा, एकवचनम् ।
  - तम् – तत् – पुं, द्वितीया, एकवचनम् ।
  - एवंगुणसम्पन्नं, रामं, सत्यपराक्रमम् – गुणसम्पन्न, राम, सत्यपराक्रम – पुं, द्वितीया, एकवचनम् ।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथस्सुतम् ।
प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया ॥1.1.20॥
यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः ।

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

महीपतिः दशरथः प्रकृतीनां हितैः युक्तं श्रेष्ठगुणैः युक्तं ज्येष्ठं प्रियं सुतं (रामं) प्रकृतिप्रियकाम्यया प्रीत्या (च) यौवराज्येन संयोक्तुम् ऐच्छत्।

- अन्वयार्थः

राजा दशरथः प्रजानां कल्याणे युक्तं श्रेष्ठगुणैः सहितं ज्येष्ठं पुत्रं रामं प्रजाकल्याणेच्छया सहर्षं युवराज्यपदे आरोहितुम् अवाञ्छत्।

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies
धियो विश्वा विराजति।

ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथस्सुतम् ।
प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया ॥1.1.20॥
यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः ।

- पदपरिचयः
  - ज्येष्ठं, युक्तं, सुतं, प्रियम्– ज्येष्ठ, युक्त, सुत, प्रिय – पुं, द्वितीया, एकवचनम्।
  - श्रेष्ठगुणैः,– श्रेष्ठगुण – पुं, तृतीया, बहुवचनम्।
  - हितैः – हित – नपुं, तृतीया, बहुवचनम्।
  - दशरथः – दशरथ – पुं, प्रथमा, एकवचनम्।
  - महीपतिः – महीपति - पुं, प्रथमा, एकवचनम्।
  - प्रकृतीनाम् – प्रकृति – स्त्री, षष्ठी, बहुवचनम्।
  - प्रकृतिप्रियकाम्यया – प्रकृतिप्रियकाम्या – स्त्री, तृतीया, एकवचनम्।
  - प्रीत्या – प्रीति – स्त्री, तृतीया, एकवचनम्।
  - यौवराज्येन – यौवराज्य – नपुं, तृतीया, एकवचनम्।
  - संयोक्तुम् – तुमुन्नन्तम् अव्ययम्।
  - ऐच्छत् – इषु- इच्छायाम्, कर्तरि, प्रथमपुरुष, एकवचनम्।